सापि जन्मान्तरस्मृत्या दूत्येव दृढमाप्तया ।
प्रेर्यमाणापि धैर्येण प्रत्युत्थानादि नाकरोत् ॥ १२० ॥

जृंभितोत्कम्परोमाश्रुस्वेदश्वासादिविक्रियाम् ।
दृष्ट्वा तां क्षणनिष्पन्दां ववन्दे बालचन्द्रिका ॥ १२१ ॥

उत्थाय परिरभ्यैनमन्यव्याजान्नृपात्मजम् ।
सविभ्रमं प्रणम्योर्व्यां निषसाद नृपात्मजा ॥ १२२ ॥

स राजवाहनं पश्यन् सर्व एवाङ्गनाजनः
पुष्पधन्वानमेवैनं मूर्तिमन्तममन्यत ॥ १२३ ॥

वसुमत्यामयं जातो राजहंसान्महीपतेः ।
येन त्वं लिखिता...त्याचख्ये बालचन्द्रिका ॥ १२४ ॥

तयोरनङ्गसङ्गीतभङ्गीरङ्गायितात्मनोः ।
विकारा विविधाकारा बभूवु　र्णे ॥ १२५ ॥

(परिहा) सप्रसङ्गेन व्याजहार नृपात्मजः ।
न पीडनीयाश्चक्राङ्गास्तथा हि श्रूयतां कथा ॥ १२६ ॥

आसीत्कंसरिपोः पुत्रः साम्ब इत्यस्य वल्लभा ।
अभूत्त्रिभुवनस्त्रीणां भूषणं भौमनन्दना ॥ १२७ ॥

स तया समनिर्वी . . . . . न्मना ।
. . . . मुनेः शापान्मानुषत्वमभूत्तयोः ॥ १२८ ॥

अभिन्नरूपतां तत्र स्मरणं दर्शनं तयोः ।
अल्प . . . . . . . . . . . . ॥ १२९ ॥

(साम्बस्य) वल्लभाप्येवं यज्ञवत्यपि तत्फलम् ।
भुङ्क्त एव तथाभूतेत्यतिगम्भीरमभ्यधात् ॥ १३० ॥

ततोऽस्य .. . . . . . . . . .　।
. . . . . . . . . . . . नृपकन्यका ॥ १३१ ॥

तया चिक्षीयमाणः स प्रवृत्या नृपनन्दनः ।
चकाराभ्यवहारा(दि)ष्वाभि . . . . ॥ १३२ ॥

. . . . . . नुरक्ते दिनश्रिया ।
विहर्तुमिव मार्ताण्डेऽप्यवतीर्णोऽपरार्णवम् ॥ १३३ ॥

क्रमेण तरुणीभूते तमसि ग्रह................ ।
......म्बरं चन्द्रेऽप्यैन्द्रीवदनचुम्बिनि ॥ १३४ ॥

प्रदोषसमये प्राप्ते निवृत्ते जनसंकुले ।
कथमप्य(पहायैनां कुमारः प्राविशत्) गृहम् ॥ १३५ ॥

चक्रे शय्यागतश्चिन्तां चिरदृष्टापि मे प्रिया ।
न (पृष्टा) कुशलं कष्टं दूरे कण्ठग्रहादयः ॥ १३६ ॥

सा राजकन्या संप्राप्ता वय(मप्येवमास्महे)
(असह्यः का)मसन्तापः किमत्र करवाण्यहम् । ॥ १३७ ॥

अदत्तां गुरुभिः कान्तामदृष्ट्वा च पुरोधसम् ।
न शक्यं परिणेतुं तत्सर्वथा दुर्वहो भरः ॥ १३८ ॥

चिन्तयन्तममुं दृष्ट्वा सन्तप्तेव ततो गता ।
अवश्यायाश्रु वर्षन्ती नमादिन्दुमुखी निशा ॥ १३९ ॥

मुखमाखण्डलाशाया मण्डयत्यर्कमण्डले ।
प्रभाते सुहृदभ्येत्य व्याजह्रे राजवाहनम् ॥ १४० ॥

देव जागरकारस्ते विकारः किमकारणम् ।
अकस्मादियमङ्गानां कथय क्षामता कथम् ॥ १४१ ॥

इत्युक्तः प्रत्युवाचैनं कुमारः श्रूयतामहम् ।
साम्ब एवास्मि सा कन्या यज्ञवत्येव मे प्रिया ॥ १४२ ॥

अद्यैनामनवद्याङ्गीं प्रसङ्गात्पश्यतः प्रियाम् ।
सुप्तोत्थित इवात्यर्थं जृम्भते मे मनोभवः ॥ १४३ ॥

विमृतात् मृदुवत्तीक्ष्णैर्विशिखैर्निशितं जगत् ।
दुरात्मा कारयत्येवः प्राणिनः किं न सौनकः ॥ १४४ ॥

भ्रूक्षेपवर्ति त्रैलोक्यं कुर्वता क्रूरकर्मणा ।
असंख्याः खण्डितप्राणाः पुण्डरीकादयोऽमुना ॥ १४५ ॥

अनेनैव प्रियाहेतोरस्यर्थं चित्तजन्मना ।
अविषह्यस्मरावस्था वयं चेतः कदर्थिताः ॥ १४६ ॥

करपत्रायते वायुः शि(खि)पिविष्टायते शशी ।
रम्यभूतानि वस्तूनि व्यत्यस्तानीव भन्ति मे ॥ १४७ ॥

किं कर्तव्यमिति श्रुत्वा हृष्टः पुष्पोद्भवोऽभ्यधात् ।
सत्यं सर्वे इमे दोषाश्चित्तजन्मनि किन्त्विह ॥ १४८ ॥

श्लाघ्यायां जन्मशीलायां प्रियायां प्रथमं तव ।
युक्तं चित्तभुवारब्धं सदृशस्नेहकारिणा ॥ १४९ ॥

व्यतिरिक्तविकारैव त्वत्तोऽपि नृपकन्यका ।
तदत्राभिमतव्या (प्रा)प्तौ विषादस्तव किंकृतः ॥ १५० ॥

दर्पसारमवज्ञाय स्वसुरस्य परिग्रहः ।
तेजोनुरूपस्तत्सर्वं कल्याणमिव लक्ष्यते ॥ १५१ ॥

इत्यस्मिन्नन्तरे प्राप्ता विविक्ते बालचन्द्रिका ।
आचष्ट कुशलं पृष्टा सप्रत्ययमिदं वचः ॥ १५२ ॥

देवाद्य कुशलं देव्या यथावस्था निशम्यताम् ।
त्वद्दर्शनात्प्रभृत्यस्माद्विरक्ता सर्ववस्तुषु ॥ १५३ ॥

तयाहूता सखीं द्रष्टुं तुङ्गतारणगोपुरम् ।
लक्ष्मीमयमिवाश्चर्यमप्राक्षं नृपतिक्षयम् ॥ १५४ ॥

गत्वाम . . . . रोद्देशं तत्रोद्यानगता गिरः ।
चित्ताः परिजनस्त्रीणामश्रौषं पापशंसिनीः ॥ १५५ ॥

ततः क्रीडासरस्तीरे धारागृहगतां सखीम् ।
अन्यामिव शुचा (शो)च्यामपश्यं नृपकन्यकाम् ॥ १५६ ॥

सा मां समीक्ष्य संभ्रान्ता चिन्ताभारकृशा भृशम् ।
अपृच्छन्मां परिष्वज्य त्वद्वृत्तान्तमनन्तरम् ॥ १५७ ॥

मयोक्तं देवि सोऽप्येवं किमपि व्यक्तविक्रियः ।
गतायां त्वयि संतापादकरोद्वासराक्रियाम् ॥ १५८ ॥

गते सुहृद्गृहं तस्मिन्नाहूताहमिहागता ।
भद्रे कथमियं जाता त्वदङ्गे कथय व्यथा ॥ १५९ ॥

इति पृष्टा परिष्वज्य प्रेमगाढं चिराय माम् ।
अतिगंभीरमारेभे विविक्ते वक्तुमित्यसौ ॥ १६० ॥

सखि पश्याप्रकाश्येयमावयोः श्रूयतां कथा ।
स एव साम्बः किं गुप्त्या यज्ञवत्येव सास्म्यहम् ॥ १६१ ॥

त्वयापि श्रुतमेवावामेव देवसुरेशयोः ।
जनित्वा मुनिशापेन प्राप्ताथ (प्नुवो) विरहव्यथाम् ॥ १६२ ॥

अहो मे हृदि नैर्घृण्यं यच्चिरोपगते प्रिये ।
नाश्लिष्टं कष्टमौचित्यं चिन्तितं पापया मया ॥ ६३ ॥

इत्यालपन्ती संतापैर्मज्जन्ती मदुरःस्थले ।
मूर्च्छया पतिता भूयः प्रत्याश्वस्येदमभ्यधाम् ॥ १६४ ॥

गच्छ त्वं सखि संतप्तं संतोषविषये त्वदा ।
किं ते जन्मान्तरे प्रेयानचिरादनुभूयताम् ॥ १६५ ॥

अनुरूपवरप्राप्तिः पितृभ्यां तेऽनुमन्यते ।
चण्डवर्मा विरुध्यात्तत् कर्तव्यं(व्यो) गूढसंग्रहः ॥ १३६ ॥

इत्यादि चिरमुक्त्वैनामाश्वास्याहमिहागता ।
दुर्वचा वर्तते तस्या न जाने कीदृशी दशा ॥ १६७ ॥

इति मृदु कथयित्वा लज्जया नम्रवक्त्रां
मृदुतरमभिधाय स्वैरमात्मीयवार्ताम् ॥ १६८ ॥
निपुणामिति कुमारः पूर्वजन्मोचितार्थां
रमयितुमथ ता(गा)थां प्राहिणोत्प्राणनाथान् ॥ १६९ ॥
मरुन्धती स्मरशरपीडितात्मनो·
र्यदाश्रमे तरुणि पुरा व्यद... ....य । ........
...................................
...................................
तदद्य ते हृ(य)दि मदनास्त्रमुद्रितं
मृदुस्मिते लिखितमिवात्र तिष्ठति (?) ॥ १७० ॥
इत्येनां तदनु विसृज्य सोपचारं
यत्रान्य प्रियजनदर्शनोत्सवोऽभूत्
...................................
...................................
आनन्दास्तिमितमना विनोदनार्थी
तं देशं ससुहृदुपाययौ कुमारः ॥ १७१ ॥

इत्यवन्तिसुन्दरीकथासारे षष्ठः परिच्छेदः ।

---:o:---

# अथ सप्तमः परिच्छेदः ।

अथालोक्य द्विजं कञ्चित् प्रद्वारे देवमन्दिरे ।
सज्जं प्रायोपवेशाय प्राप्यैनं तमपृच्छत ॥ १ ॥
अकस्मात्किमयं कायस्त्यज्यते को भवानिति ।
पृष्टः प्रान्तोपविष्टाभ्यां ताभ्यां भूतार्थमभ्यधात् ॥ २ ॥
अग्रहारोऽस्त्यगस्त्याशाभूषणं चोळभूमिषु ।
व्याघ्रग्रामाह्वयः सोऽयं तद्देशाभिजनो जनः ॥ ३ ॥

विप्रो विघ्नेश्वराख्योऽहं (प्राप्य) मन्त्रं कुतोऽप्यहम् ।
गारुडं तेन विद्यार्थी लब्धविद्यालवोऽभवम् ॥ ४ ॥

सर्वेषां पुरुषार्थानामर्थाधीनतया पुनः ।
अशिश्रयममर्यादं राजवेश्म किमप्यहम् ॥ ५ ॥

तत्र क्षुद्रान् पशुप्रायानपश्यं पार्थिवब्रुवान् ।
उपचीयन्त एवैषामधानितत्रभिषेक (सेव) ने (१) ॥ ६ ॥

येषां दोषेषु सौहार्दं साहसेषु सहायधीः ।
नयज्ञबुद्धिर्मायाविच्छ्रीलोक्तिषु वाग्मिता ॥ ७ ॥

निर्वेदकरमाचारं दृष्ट्वा तेषां दुरात्मनाम् ।
निवृत्तः सर्वसंसारान्मरणायेदमारभे ॥ ८ ॥

इति श्रुत्वा शुभां वाचं व्याजहार नृपात्मजः ।
सत्यं दुःसह एवासौ पुंसां दुर्जनसङ्गमः ॥ ९ ॥

सन्त्येव भुवि सन्तोऽपि तुल्याः स्वार्थपरार्थयोः ।
सद्भिः सहोपवासोऽपि श्रेयानन्यैः सुखाशनात् ॥ १० ॥

अपनीयायुषि द्वेषं तद्भवाननुयातु नः ।
इति ब्रुवति तत्रैका शिबिका समदृश्यत ॥ ११ ॥

तस्यां वर्षवरप्रायैः स्त्रीजनैर्वृतमान्तिकान् ।
रुजापरीतमेत्याभि सोमदत्तमलक्षयन् ॥ १२ ॥

सोमदत्तः सुहृत्प्रेम्णा स्वस्थीभूतः स तैः सह ।
प्रच्छाये क्वचनासीनो निगृह्य ज्वरवेदनाम् ॥ १३ ॥

वर्गाद्यान्तान्तस्थैरनुस्वर्णविवर्जितैः स्वरैर्मृदुभिः ।
स चतुर्विंशतिवर्णैः स्वचरितमनुवर्णयां चक्रे ॥ १४ ॥

कुमारतत्राचलकानने त्वं (त्वां)
विलो(क्य)किते ताभ्यां ते मित्रलोके ।

चरत्यवन्यामनुपारियात्रं
वनोर्मिमालिन्यपरा मयापे ॥ १५ ॥
ततो मणिं तत्पुलिने निलीनं
विलोक्य मत्वा पतितं कुतोऽपि ।
पटान्तमानीय चरन्नटव्यां
व्यलोकयं विप्रकमार्तरूपम् ॥ १६ ॥
विचार्य ते केन (किलाप्तमे) त-
न्मयैवमुक्ते लपितं च तेन ।
अकिञ्चनः किञ्चन याचमानो
लग्नक्रियां लाटपतेर्नयामि ॥ १७ ॥
लाटोत्तमे तत्र च मत्तकाले
कन्यानिमित्तं प्रति पारियात्रम् ।
प्रवर्तमाने कटकानुवर्ती
चराम्यरण्ये परियाचनाय ॥ १८ ॥
एवं मयाकार्ण्य मणौ वितीर्णे
विप्रे ततः प्रीतिकरे प्रयाते ।
प्रमीलितं किञ्चन कंच विप्रं
किमप्यनीकं पुरतोऽप्यनेकैः (?) ॥ १९ ॥
ते मामवोचन् परिवार्य कोपात्
द्वित्राणिचान्ये मणयः क्वेति ।
नावैमि किञ्चित् पुलिने मयैत-
न्माणिक्यमालोकितमित्यवोचम् ॥ २० ॥
एतावतान्यानपि पञ्चचोरा-
नाहूय तान् नः कटकं नयन्तः ।
ते मानवाः कर्णकटु क्वणन्तः
कारालयं नो नियमय्य निन्युः ॥ २१ ॥

उक्ता विविक्ते तु मया किमेतत्
के यूयमित्यूचुरमी च चोराः ।
लाटोऽयमन्योज्ज्वलितो रिपाव-
प्यलं निकर्तुं न तु पारियात्रे ॥ २२ ॥
तत्कन्यकां लाटपतिः प्रतीतां
नाम्ना च वामाश्चितलोचनेति ।
आकर्ण्य तूर्णं परिणेतुकामः
प्रचक्रमे मित्रतया प्रयातुम् ॥ २३ ॥
अवेत्य तन्मित्रचरोऽप्यरातेः
प्राप्तिर्नयुक्तेति विचार्य कन्याम् ।
अमात्यमित्रावनिपालयुक्ता-
मनीनयत्तामपि पारियात्रम् (:?) ॥ २४ ॥
पश्चापि चोराः कटकानुयाता
अमात्यपुत्रानुचरा वयं ते ।
रत्नानि लाटालयमेत्य वैरी-
त्यचोरयामात्र निलीयमानाः ॥ २५ ॥
वने क्वचिच्चोरितरत्नमेकं
च्युतं ततोऽप्राप्य निकेतमार्ताः ।
एतन्निमित्तं पुनरप्युपेताः
क्रान्ता वयं चैत्रमनीकवीरैः ॥ २६ ॥
आकर्ण्य चैतच्चरणेन यन्त्रं
लूत्वा वयं तत्तमसैव चोरैः ।
लुप्त्वा वयं तान्यपि यामिकाना- ?
मालूय कन्यां कटकप्रपन्नाम् ॥ २७ ॥
तत्रैकतो यामवतीविरामे
क्रमान्निलीनं नयनोऽप्युपान्ते ।

पत्रेण नारीमपि मारयन्तं
कमप्यलङ्कारकृचा व्यलोके ? ॥ २८ ॥
तं मारयित्वा वनितामवोचं (?)
का त्वं किमित्यालपितं च तन्व्या ।
अवैतु कन्यापरिचारिकां मा
समानपालः (खलु मानपालः) ॥ २९ ॥
अमात्यपुत्रःप्रणयी च योऽयं
कल्याणिना कालपुरं वृणीतः
प्रकण्टको नाम च भूपतेर्नः
कुलान्तकः पीलुपतेः कुमारः ॥ ३० ॥
मैत्री परा पत्युरनेन चायं
चिरायमाणे रमणेऽत्र रात्रौ ।
प्रेम्णानुनीय प्रतिकूलरूपां
मां मारयन् कारुणिक त्वयाप्तः ॥ ३१ ॥
इतीरितां वाचमवेत्य वाप्यां
रक्तावलिप्तं परिपूय कायम् ।
वेलावतेरुच्चलितैरवाप
व्याकर्णयन् व्याकुलरावमेवम् ॥ ३२ ॥
मित्रं प्रमाण्यात्मनिकेतनेऽपि
व्यलीकमारोप्य च मानपालः ।
प्रकण्टकं पीलुपतिप्रयुक्तै-
र्नियन्त्रितो यातयितुं प्रणीतः ॥ ३३ ॥
न युक्तमित्यत्र च मानपाले
क्रूराणि कर्माण्यपनीत एव ।
प्रकण्टकं किंच तयोक्तमेवत्
सोऽप्याचरन्मारयितुं ममेति ॥ ३४ ॥

लोकप्रलापानिति तत्र चित्रा-
नाकर्ण्य तूर्णं विचरन्नृपान्ते ।
तत्पारियात्रे (?) परिपाल (लय ?) कन्यां
न्यरूपयं तत्र च पर्वतान्ते ॥ ३५ ॥
मारातुरः किञ्चन चिन्तयित्वा
विमुच्यतां मन्त्रि ( आरात् ) कुमार........!
एतन्मयैवाक्रियतामुना ने-
त्यवोचमुच्चैः करमुन्नमय्य ॥ ३६ ॥
ते पञ्चचोरा अपि मानपालं
पर्यायुरुन्मील्य कुलं रिपूणाम् ।
याता वयं यत्र पवित्रचारी (?)
तं पर्वतं वैरिनिवारणाय ॥ ३७ ॥
विलुप्तमौर्यः पुनरेत्य कान्तां
प्रवाततान्तामिव वेपमानां ।
चोरा वयं ते परिपालनीया
इत्यालपन्तच्चरणान्तवर्ती ॥ ३८ ॥
कन्या तु कामातुरविक्रिया माम्
व्रीलाविलोलाननमालुलोके ।
आलोक्य तत्रान्तिकवर्तिनी मा-
मित्यालपन्मन्त्रि कुमारकोऽत्र ॥ ३९ ॥
वक्त्रान्ममत्वच्चरितान्यवेत्य
प्रीतेयमत्राप्यतिमानवेन ।
रूपेण रम्येण पराक्रमेण
क्रीतेव ते कर्मकरी कुमारी ॥ ४० ॥
इत्यन्तरे मन्त्रिकुमारपूर्वा
मामन्ववर्तन्त परेवात्रिप्राः ।

लाटः पुनः पीलुपतिप्रणीताम्
वार्तामवेत्याकुलमापपात ॥ ४१ ॥
रूपैरनेकानुचरं विचित्रै-
रालातचक्रेण च वारणेन ।
रणान्तरे लाटप(ति)तिं रिपुन्तं
यमालयं प्रापयमात्तकोपः ॥ ४२ ॥
पत्रेण मन्त्री मतिपालनामा
तां पारियात्राय निनाय वार्ता ।
प्रीतः परं तेन वितीर्य कन्या-
मकारयन् मामपि वीरकेतुं ॥ ४३ ॥
प्राप्तेयमापत्पुनरामयात्मा
मामेवमूचे प्रविलोक्य मन्त्री ।
कर्मान्तमार्ता तवयं प्रपन्ना ?
पुरा पुराराातिमवन्तिपुर्यां ॥ ४४ ॥
मालावती नाम च वीरकेतोः
वरं त्रिणेत्रं वरमर्थयन्ती ।
तं कन्यकापत्यमयाचतैनां
प्रीतः पिनाकी पुनरित्युवाच ॥ ४५ ॥
कन्या वितीर्णा वरवर्णिनी ते
यः कन्यकायाः कलयेत्करान्तम ।
अनर्चिता त्रीनपि चेन्ममर्तून्
चित्तामयेन म्रियते पुराय- ॥ ४६ ॥
मित्येवमेनामपि पारियात्रः
कुर्याममित्रान्ततयेति मत्वा
तां मृत्तकाछाय निनाय कन्याम् ॥ ४७ ॥
.................. ..................

——:0:——

॥ श्री ॥

श्रीसरस्वत्यै नमः ।

. . . . . . . . . . . . . . . .

# अवन्तिसुन्दरीकथा ॥

महाकविदण्डिकृता ।

हिरण्यगर्भमीशानमाद्यं च पुरुषं हरिम् ।
त्रीनप्यसत्यनानात्वान् वन्दे विश्वशरीरिणः ॥ १ ॥

हृद्यो रामायणं नाम यन्मुखान्मधुनिर्झ(रः) ।
............................................................ ॥ २ ॥

मर्त्ययन्त्रेषु चैतन्यं महाभारतविद्यया ।
अर्पयामास तत्पूर्वं यस्तस्मै मुनये नमः ॥ ३ ॥

बभूव जिह्वाभिनयः कवीनां यदनुग्रहात् ।
अनुशासितृ शब्दानां तन्नमामि... .... ॥ ४ ॥

..............................परा: ।
येषां जगत्त्रयालेख्यविचित्राश्चित्तभित्तयः ॥ ५ ॥

सुबन्धुः किल निष्क्रान्तो बिन्दुसारस्य बन्धनात् ।
तस्यैव हृदयं बध्वा वत्सराजो...... ॥ ६ ॥

..................तमानवदेवया ।
गोमुखान्वितया जातिः का बृहत्कथयोज्झिता ॥ ७ ॥

सनारायणदत्ता या देवदत्ताश्रया कृतिः ।
मूलदेवोदि...................... ॥ ८ ॥

(शू)द्रकेणासकृज्जित्वा स्वच्छया खड्गधारया ।

जगद्भूयोऽभ्यवष्टब्धं वाचा स्वचरितार्थया ॥ ९ ॥
अप्यतिक्रम्य लोकस्य श्रुतिवर्त्मनि... ।
...... ..................भारती ॥ १० ॥
सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः ।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः ॥ ११ ॥
राज्ञा श्रीसर्वसेने(न).................. ।
.................विजयं हरिः ॥ १२ ॥
सेतुरूपेण तिष्ठन्तो लोके सद्वस्तुदर्शिनः ।
षट्पञ्चाशत्प्रमाणत्वं गता नः कविपुङ्गवाः ॥ १३ ॥
स्वयं मद्धु.............................. ।
.........किरातं भारोऽवगच्छत ॥ १४ ॥
लिप्ता मधुद्रवेणासन् यस्य निर्विवशा गिरः ।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम् ॥ १५ ॥
चक्षुः क्षति ............... ।
................... ॥ १६ ॥
व्याप्तुं पदत्रयेणापि यश्शक्तो भुवनत्रयम् ।
तस्य काव्यत्रयव्याप्तौ चित्तं नारायणस्य किम् ॥ १७ ॥
सर्वतोमुखमप्याद्यं कविमद्य .... ।
कस्तं न स्तौत्यनुन्मत्तः कवीनां चक्रवर्तिनम् ॥ १८ ॥
भिन्नस्तीक्ष्णमुखेनापि चित्रं बाणेन निर्व्यथः ।
व्याहारेषु जहौ लीलां न मयूरः ..... ॥ १९ ॥
............चित्रायते मम ।
वर्णहीनापि या जाता जात्युत्कर्षगुणास्पदम् ॥ २० ॥
धवलप्रभवा रागं सा तनोति मनोवती ।

कश्चिन्नागजैरमिर: . . . . . . . . . ॥ २१ ॥

. . . . . . . . स दामोदरवंशज: ।

आवर्जमे तिरश्चामप्येति हृद्य इव ध्वनि: ॥ २२ ॥

धिगस्तु कविकाकस्य तस्य तद्वक्त्रदर्शिन: ।

प्रसारयति . . . . . . . . . . . . ॥ २३ ॥

. . . . . दुं दुरुक्तं नाम दुष्करम् ।

आलयिष्यति क: कार्ण्यं द्विजातेः कौशिकद्विष: ॥ २४ ॥

खलकाकमुखालीढाप्यमलैव सरस्वती ।

तत्किंचि . . . . . . . . . . . . . ॥ २५ ॥

. . . . . वौ परस्परमनुग्रहात् ।

एधन्तामृद्धिकीर्तिभ्यामितरेतरवल्लभा: ॥ २६ ॥

असुरा: पराजयन्तां जयन्तु देवा: सरस्वती जयतु ।

जयतु महाकविसार्थ: . . . . . . . . ॥ २७ ॥

. . . . . दिमङ्गनामुखे पञ्चांगुलिभिरिव सकलोज्ज्वलवर्णशोभिनी सन्निविष्टा अवजचामरमञ्जरीवाक्षीणदानसन्तानजनितसौरभमत्तमृङ्गमाला दाक्षि . . . . . वोत्तमाङ्गनाहिता चक्रवर्तिक्षेत्रलक्षणया कामप्रसवोपदानक्षमा कल्पद्रुमयष्टिरिव जम्बूद्वीपनन्दनस्य हेमरत्नाञ्चितम . . . कोशसंच . . . . . . . सद्नलिनीपीतगन्धसमुदपुण्डरीकावृहातगाढसलिलया सुरानैकवासानवासवत्यागिनी चेयमित्यवज्ञाय वस्वोकसा राकोश . . . . . वया मदमञ्जुलहंसगद्गदरवया युवतिजनस्य चक्षोदजनितवीचीकेशया वेत्रवत्या विरचितखातकृत्या क्रोडीकृत्य सर्वसारिद्रत्नमुद्वीपपत्तनोत्पन्न . . . . . तुभूतमुत्सृज्य जडत्वं स्वयमचलेभ्योऽपि स्थिरतरेमाकृप्रारिकरं स्थितेव शीतकालवदनसुधान्वितेव दुग्धजलधिनेव कैलासशिखर . . . . . (2 a) मगगनाभोगमिव प्रसमाना

दिग्गजैरिव दिगन्तव्यापिभिरम्बरसरिदम्बुधौतकुम्भमण्डलैश्चतुर्भिर्गोपुरद्वारैरुपेता, गोपुरगुरुफणाम . . . . . भागविस्तारवाहिभिरनेकनागाङ्गनागमजनितर्द्धिभिः प्रशस्ततक्षकादिघटितैर्भुजगराजैरिव भोगवतीमहापथैरुपशोभिता, मणिमयसमभूमि . . . . . (विमा)नैरिवामरगणाध्यासितैर्नलिनकादिभिर्महाप्रतारितैश्च महापुरुषोचितैर्महापुरुषैरिव लक्षणोपप . . . . . . . टशिरोभिर्दृढभकोष्ठस्कन्धकूटैरश्लथश्वराक्षैश्चतुरङ्गिर्जातिभिरत्युदारैरुदग्रशक्तिभिः कृतवेदिभिरग्राम्य . . . . . सुरभिनागैरशोकरागवद्भिर्महाभव्यैर्विजृम्भितपलाशैः केसरिभिरर्जुनललितैर्माधवीमनोहरैः काम . . . . दैरिव चारुपारावतान्वितै रतिनगरैरिव कृतसालपरिकरैः शृङ्गारान्तःपुरैरिवामलजातिकान्तिभि . . . . . तैरागसमुद्रैरिव स्फुरत्प्रवालपटलैर्धर्मैर्नालापत्यैरिव धात्रीसमधिष्ठितैः कामुकैरिव रचितप्रियालकै . . . . . . . मङ्गैरिव पाण्डुच्छायोदयदमनकैर्गौरीचारितैरिव प्रभवसंपदार्जितश्रीकण्ठमनोहरैर्भारतसमरैरिव कौरव . . . . सुरङ्गैरिव चारुचम्पकैर्मगधैरिव कान्तपुष्पपुरजनवल्लभैर्भवाङ्गैरिव नागवल्लीपूगशोभितैः सत्सङ्गैरिवाम्लानकरमणी . . . (2 b) नैरिव संगृहीतैर्बाह्यैराभ्यन्तरैश्च वर्धितप्रमदाजनप्रमदैः प्रमदवनैर्निदाघभिया शरणागतं शिशिरमिवाभिपालयती . . . , रमणेन स्वभवनकुटुम्बिना युगपदेव धर्माधिकरणे व्यवहर्तुमम्बुराशिमिवागत्य बहिर्निविष्टैर्वलतेव बडवामुखेन . . . . . . . हलकलकलमिव कलविहतिमदकलननिभृतगतिजलविहगकुलं वहद्भिरनेकपकुलविहृतिभिरवनतमिव जलधर . . . . . बुपा . . . . . . , कमण्डलैर्भाठ्यमानस्य परिकरा मरकतवेदिकाहरितकमलिनीपलाशस्थितेव विततसितभवनसालमाला . . . . . . . . . लिततनितम्बिनीकदम्बकमितम्बबिम्बप्रलम्बितमञ्जुशिञ्जानकाञ्चीव.मा काञ्चीपुरं नाम राजधानी । यया सहर्षि . . . . . .

. . का पर्यभूतमराक्ती, यस्यां च भौमसुधासमुचिता दिव्यसुधास्वा-दमलसा इव रजनीषु रजनिकरमुज्झिहन्ति रक्तया...... ... यस्यां च मंजुभाषां कुञ्चितकेशपक्ष्मच्छायातर्जितानि मासान्निव सततमाक्रन्द-न्त्युपसंसक्तमधुरकुलानि लीलाक............मानमद्सेवन्ति श्रवणेन्दी-वराणि स्मितचन्द्राणि विहसितानि वैलक्ष्यमिव कुण्डलितान्यावृत-श्रवणं शेरते रते दन्तपत्राणि..........मुद्वहन्ति स्तनावरणारुणांशु-कानि कराक्रिसलयविडंबितानि तापादिव शनैर्म्लापयन्ति विभ्रमाम्भोरु-हाणि नखमणि........फ .........रच्छत्रयति विलासकुसुमानि श्रो-णिबिम्बलावण्याभिभूतवर्णोत्कर्षाणि विषादादिव दशान्तयां दधत्युत्त-रीयाणि पादपल्लवसहजरागावधीरित..........(3 a) तल्पेष्वन्ध-कारकवलितमिवेन्द्रनीलाजिरेषु तदवमानलज्जाकृताभिरवेशामिव . . . . ....गमण्डलं याचन्त्यकृत्रिमानङ्गभावयोग्याभिरनेकशतपुरुषापेमहरका-राभिरपि वृतोत्तमाभिरपरप्रत्यय.........मावानभिज्ञाभिरनुरूपसर्ग-वेदिनीभिरपूर्वाभ्यासकरणकुशलाभिर्गुणवृद्धिविशयित स............ स देवताभिरिव सञ्चरन्तीभिरवधारितरूपलावण्यवैदग्ध्यसौष्ठवतया . . . . . . विशालतया नास्ति बहिर्भुवनमुखतया सौधानां लोष्ठका इव गिरयः . . . . , गाम्भीर्येण दीर्घिकानामुत्तानमिव सागरतलम-तिशयेन शिल्पकतामाकिञ्चि . . . . . . रपर इव पाकशासनो न पा-ता सुराणां न क्षपयिता सपक्षभूभृतां न कर्ता गोत्र . . . . . . धैर्यः परिग्रहस्य नाभिषेकाजनार्दनस्य दिनकर इव दीप्तविग्रहो भोग इव पृ-थुललाटभूमिकमागुरुरिवायतभुजगभोगः कपिकेतुरिव कर्णान्त.... . . . . . . (3 b) जाङ्गलोदेश इव समस्तरसालो (?) रामीव सु-तनुमध्यवृत्तिः दर्दुराचल इव घनोष्म . . . . . . कराद्विव राजसत्त्व-मर्यादाकुष्ठकाकितसर्वकः सर्वराजकहरिणयूथमथनराजसिंहः सिंह-विष्णु . . . . . . . धूलिसङ्गधूसरितया राज्याभिषेकादिह्यमाणिपीठा-

तकरजो राजीव . . . . . . समुल्लंघनाभिलाषुकेण सकलकरणभया-
सहेतोरभि(ष)कप . . . . . दहनदह्यमानकथदर्शितजीवितकवल-
संभूतसन्त्रपयेव प्रकामवितते . . . . . . टारया खङ्गलतया येन च
प्रथममेवाभिनवयौवनापूर्यमाणभुजशिखर . . . . . . . णपार्थितस्य
यस्मिंश्च भूभुजि भुजस्तम्भेन भुवं भोगभङ्गो भुजङ्गमानां न च भुजं....
. . . परस्परपातो गोलकानां न च गोलकाः सूक्तातिक्रमो नक्तञ्चराणां
न च नक्तञ्चराः तमः प्रसारः प्रदोषाणां न च प्रदोषाः . . . . .
भार्गता प्रभञ्जनानां न च प्रभञ्जनाः रूपध्वंसो लुब्धानां न च लुब्धाः
चित्रभासि . . . . . . (4 a) विबुधोऽपि कथामृतरसं (?) कलाकृ-
तयेप्यापन्न एक . . . . . रसिंहसुख: । स इमामार्यामाकर्ण्य गुणकुतू-
हली तमप्राक्षीत् । भद्र कस्यैतान्यक्षराणि विकटबन्धान्योजस्वीनि च
लक्ष्यन्ते . . . . . स तु संप्रणिपत्य व्यज्ञापयत् । " देव परमनुगृ-
हीतोऽस्मि श्रवणप्रधानादनुगृहीततमः . . . . . . णावास: ततो हि
निःसृता सरस्वतीव ब्रह्मलोकादगस्त्यमूर्तिरिव गिरोद्गीर्णम . . . . .
रत्नकस्य कुवनिवेशिवमचलपुरं नाम गवयोदकपुष्पवासितकलकानना-
यासि . . . . . . . सम्भृतभूतिरधिवसति कुशिकवंशवर्द्धनी सर्वातिथि-
थिरप्रतिगृहीत्री महत्सु . . . . . . (ना)रायणस्वामिनो नाभिपद्म
इव अशोकधाम दामोदरस्वामिनामा त्तमेत (?) . . . . . . सर्वाङ्गम-
नोहरया सर्वज्ञया विदग्धया सर्वभाषाप्रवीणया प्रमाणयुक्तया ललित-
पदविन्यास . . . . . स्नेहमसज्यत । को हि नाम भगवतीं भवित-
व्यतामतिक्रम्य यथा समीहितेन साधयति पथा? । यतः कौशि...
. . . . (4 b) व पुण्यकर्मणि विष्णुवर्द्धनाख्ये राजसूनौ प्रणयमन्व-
बध्नात् । एकदा च मृगयां गच्छतामुना नीतः . . . . . यात्राप्र-
सङ्गेन दिगन्तराणि भ्रमणशीलकीर्तेर्माहेयकुलध्वजस्य दुर्विनीत इति
विपरीतनाम्नः . . . . . . . . . . . . . . . . . . . . वदनादिसौजन्यं

दर्शयता अभीक्ष्णसख्येयाशो असत्यार्थेथमियं च व . . . . . . . . . . .
. . . . सौ विंशतिवर्षदेशीय" इति क्षितितलनिहितमौलिः प्रणम्याः-
चार . . . . . . . . . . . . . परम्परानुकृष्टमेनमात्मसादकरोत् ।
माहात्म्यादतिशयदर्शिताराधितपुरु . . . . पूर्वकं प्रकटयितुस्तस्य
पुत्रीकरणेन दर्शितातिप्रसादः तदनुरूपमनल्पपत्रपरि . . . . . .
कृतगानानि कानिचित्तेन प्रेषितानि श्रुत्वा परं प्रीतः कीसहस्रकुलं
च काञ्चनाभम . . . . गणान् स्तन्यमिदमतिबहुत्वाद्धाराय प्र-
त्येकं स्नानपानयत्नगौरवं तव स्यात् । अतोऽस्माभिरेकत्रैव संभृतमि-
ति प्रदी . . . . . . . स च तथा गृह्यमाणगन्धमादनप्रभृतिभिः
श्रीवरकृतैः संस्कृतप्राकृतानां च . . . . . . . (5. a) . . (ग)
म्भीरानुज्ज्वलराजहंसोपमहप्रकाशतेजसो . . . . . . . . . ध्वनि-
रङ्गनाजनचरणपद्मजल्पाकनूपुराहृतभवनदीर्घिकाकल . . . . . . .
कृतिरभिमतदेवाराधनपरपुरन्ध्रिमण्डलारब्धबहुविधोत्सवस्वनश्च पल्लवद
. . . . . . दध्वानः मध्यमस्तु तेषां मनोरथो मनोरथ इव चिरे-
णोपपन्नः कालिजिगीषो . . . . . . . म्महद्गुणरत्नराशिभाजो
महासत्त्वान्महोदधीनिव मध्यमो लोकश्चतुरो दामोद (रो)....शुद्धवृत्तस्य
वीरदत्तशर्मणोब्रह्मर्षेर्वसिष्ठस्येवारुन्धती सती नाम कामिनी गौ (री) .
. . . . . . . . . . . दण्डिनामानमविन्दत । पितुरस्य प्रेयसी
सपत्नीपुत्र इति कृत्वा म . . . . . . . न्तरे परचक्रपीडया पर्या-
कुलेषु द्रमिळचोळपाण्ड्ये (षु) . . . . . . . (5 b) रामपङ्क्तिकषु
भमासु सभादिप्रपासु . . . . . . . . . न्धुवर्गः प्रहतप्रायपरिजनः
प्रवृत्तवृत्तिक्षयो दुर्भिक्षक्षीणके . . . . . . . किंनेषु गुरुकुलेष्वल-
भत चानवद्यां गरीयसीषु च ब्रह्मक्षत्रस . . . . . . . या विश्रा-
पितदुर्जयस्य मान्धातृनाम्नः स्थपतेः प्रशस्तवास्तुशास्त्रार्थसारसा . . .
. . . . . स्तुविस्तारषण्णवतिप्रासादविधिविशारदो यानासनशय-

वादिना . . . . . . . . . तीयमयोक्ता षट्त्रिंशदाचार्यगुणैरलंकृतो
ललितालयनामा स . . . . . . . विरचित . . . . राद्रष्टिनिर्दि-
ष्टायां भूमावुपविशत् । दृष्टेऽपि तस्मिन् विस्मय . . . . . . मेष
किल यन्त्रमयमिन्द्रजालिकं कृतवानेष किल सं . . . . . . . पित्रा
यवनामप्यातिशयानेन क्षुधितोऽयमिति यन्त्रो . . . . . . . (6 a)
मवसिता एव सर्वे नित्यप्रमादशैथिल्यां शिल्प . . . . दिवैतस्मि-
न्नैपुणमपि तदनुग्रहार्थमेव . . . . . (शार्ङ्ग) धन्वनः केनापि कार-
णेन मणिबन्ध एव भग्नो . . . . . अनुरूप . . . वेति द्रष्टुमर्हथ
नहि वः शक्यमस्मादृशामसाधारणे . . . . दानदीक्षयाप्यसंतु-
ष्टा त्यागशक्तिः सनीत्या कलासमागमसभागृहं . . . . (कु) मारः
सहपांसुक्रीडासंभूतस्नेहराशिरब्रवीत् “आर्य संभाव्यता . . . . .
कारस्य सकलविद्यानदीपूरवारिधेस्तथाविरा . . . . . श्यामक्षे-
त्रैविद्यकलासु कवितायां च . . . . (6 b) च व्याख्यानचतुरश्च-
तुर्वेदवित् सर्वजनहृ . . . . . . करस्वामिनो देहभज (?) सहजकी-
र्तिराम्नायनिधिर . . . . भूमिदेवनिवहचूडामणिर्देवशर्मा त्वद्दर्शनाय
केरळेभ्यः काः . तदेषामपि सङ्कल्पानुकूलोऽयमारम्भो निर्विचा
रम - - - परेद्युः सहमित्रजनैः श्रीअयन्तनारायणभक्तमानन्दप्रभृ-
तिभिः सह - - - - - लीनक्ष्माभृत्पक्षच्छेदाक्रमसहस्राक्षदे - - - -
वैरिणममरगणमसुरसैन्यसंमर्दे - - - - - - - - मदसेकपपातकाकुलि-
तवनं वनषण्डमिवोत् - - - - - - - - - - - (7 a) श्चर्योद्भवकूटसा-
क्षिणमिव कालकूटोदीरण - - - - - - - - - नभसो भासुरभुजङ्गराज-
स्फुटफणारत्नचक्रवाळकरमलितं - - - - - - रणप्रकाशसौभाग्यराशि-
(शि ?) विषभोगभो - - - - - - - - - - णमूलं राजमन्दिरमुदीक्ष-
माणस्तरलतरङ्गभङ्गभममर्मरशिञ्जिगर्भोन्मुक्तमुखा - - - - - - - - - -
परिमळेन स्फारसुरभिचम्पकाशोकपृक्षोरपलपुंनागतिलक - - - - - -

म्यव्याकोशकुवलयदामश्यामळाभिर्लक्ष्मीकटाक्षमालाभिरिव . . . .
कैटभदानवापतशङ्कानिरूप्यमादिंशेवशे (?) - - - - - - - - - -लासनं
भगवन्तमुत्फुल्लेन चक्षुषै - - - सुयुगलम - - - - - - - - र - - -
न्ततस्नदर्पे - - - - - - (7 b) - - - शिल्पिवर्यः कृतार्थौ - - - - -
- - - प्रत्युद्गतो भगवन्ना हितारसवासोद्भवकान्तिहेतुरपर - - - - -
- - - सौरभ्यसंशयावह शतमखपरिभुज्यमानदिव - - - - - - -
- - - तिप्रबलविस्मय प्राहितहृदय: सर्व एव तेकिमप्युल्ला - - - - -
- - - र्मिपावकज्वाले वा रक्तमेवोत्पतत्सपक्ष पर्वतशिखरा - - - - -
- - - वच पश्यतां - - - तेषां लोककल्लोलमालोल्लसितोपस्नस्तं स्यन्द - -
- - - - - - - - र(?)न्त्रेणैव दिव्यस्रगनुलेपनाभरणः कृपाणधारा...
- - - - - - - स च भगवन्तं प्रदक्षिणीकृत्यहेतिगर्भमञ्जलिमुपा-
रचयत् । उत् - - - - - तेऽस्तु लोकोऽतिमात्रविस्मयविस्मृतान्तरात्मा
निरन्तरो - - - - (8 a) - - - ल्यत्रन्ध्यवागलभ्यरन्ध्रस्थूललक्षो
विचक्षणः कलासु वि - - -- (वि)श्वामित्रगोत्रः कृती रामशर्मा नाम
बालमित्रं चित्तावर्जनेषु दाने- - - गौरीपुत्रस्यापि प्रत्यक्षएवायमध्यक्षय-
द्भिर - - - - ण्डलानुकारिणा रक्तपुण्डरीकेण । पुनरमुष्य पुष्करस्य
परिणतिः पुष्व - - - थमद्यत्वेवं पुनरीदृशानामसुलभदर्शनत्वादल-
घुविस्मय - - - - तिरिति स तं प्रत्यवोचत् । सखे न स तु स-
र्वेषामेव नः समान - - - ।दनुव्याहरादम्बुरुहत्वमवाप्याम्बरादम्भ-
सान्निधौ पतितस्रोतो . . . न्तमेव हृदयं तदेहि गच्छाम इति सह
सहायैः काञ्चीमेव न्यव . . म् . . . (8 b) शाभगोद्वादश्याम-
श्रुतभक्तियोगः कल्पोक्तेन विधि . . . . दस्रयीशरीरस्त्रिभुवनपति-
स्त्रिधामा प्रतिभाकृत (?) चैतदाश्चर्यभूतं सर्वपुर... ..........भेदसंमतं
सर्वादिराजवंशवर्णनमनोहरकथं सर्वदेवासुरवृत्त..............पारमत् ।
उपारमत यामिनी । विस्मयप्रतिबुद्धस्य चास्य लोत् .............(स)लि-

ळाप्लुतः सुचिरोपस्थितपूर्वसन्ध्यः स्वनुष्ठितभगवदाराधन............... षः शुश्रूषवे सुहृद्गणाय कथामवन्तिसुन्दरीमाचिख्यासुरित्यभाषत ... ....... वतो भक्तभयहरणविधिविचक्षणस्याम्बुजेक्षणस्य.... ... .......यमहं कथयामि श्रूयताम् ।आसन्नसंकीर्णे विवि त्रवर्णाश्रमा.... .......र्यपश्या असूर्यपश्याः सुन्दरपुरन्ध्रयो निरवगहान्नि........(9 a or b)यविशालवप्रा प्रैहेय (?) विशाला वप्रा... ...... ..... मौगीनोवैरामासुराणवरभुवः प्रचुरमक्षीरकपरिय . . . (?) ...............नप्रसुकरखेटकप्रकटयोनिपोषागोजावि (?) .............वनराजयो बहुफलेमहिद्रुमसमप्रोद्मग्रामसीमानः सारसकलहंस...............प्रत्युदपानप्रक्लप्ता भवहारिणः (?) पुष्पाराममालिनो मगध...............यतकले स्मृतिरपि नाजायत जन्यस्याचिन्तापि नासीत्तास्कर्यस्यप्र.... ...........देषु कुंकुमपङ्कः केवलमाक्रीडाचलतटेषूपलाः कण्टक ...............सन्नं च विहरत्सु जलविहङ्गमेषु ते न चान्योन्यस...... ........ (9 b or a) रभसमहास्यतेव विकस्वरेण कुमुदकोकनदसा.... ...........भवनीभूतानि भूधरकुलानि राहुमुखविषनिषेकदूषण....... ...... ण्डच्छलेन मेघमण्डलानि तस्य चैवंविधस्य मण्डनं

म . . . . गरागरोषितेनोर्मिमालिनेव महता खानवलय............... दुमण्ड आदिवोत्कीर्य क्षिप्रममलमणिभूमिगर्भसंक्रान्त...............द्धरण . . . र्विशद्भिर्दारुसारमयैर्महाप्रासादैरुपशो...............रणैः समुद्भासितमुन्मीलदनेकरत्नरागवल............ रागविन्दुराजिभिरुन्मिषत्तारकागणकरालितान्ध·········· ....तबहुविधकुसुमधूलिपाटलपटमुप . . . . (10 a).... रिगमनावलेपवारणायेव प्रकम्पमानोच्छ्रितपताकव्यस्तमखिलजम्बूद्वीपलक्ष्मीलतैककुसुमं कुसुमपुरं नाम समग्रश्री... ....... ....स्तोपरुद्धगतिरमर्षज्वलित इवोत्सर्पदरुणमणिप्रभाप्रवाहोपरक्तवपुरम्बरम्बरमध्यास्थितोऽवमुक्तशैशवच्छाया इव.... ... ....... रवादिव समस(मुद्र) तरङ्गसंघातघोराघातायासितापि न कदाचन चलति भूतधात्री । यं

च निवसता धन..............णष्टात्मभिश्च व.... भवनमनन्तैश्च .... र्तां, यस्मिंश्च पौरा न मधुपायिनो दानरुचयश्च न कु................स्तयो भोगिनी.... बहुलभाषिणो बृहत्कथा....... जलाशया: सेतुबन्धलग्नाश्च न प्रमदस्पृश: कादम्बरीरसा न दृष्टय: समन्दाश्वाश्च विश्रुतबहुश्रुताश्च रामायणादि.... भिन्नाश्च दृष्टमहाभारता भीमगदाभिघातवार्तामुग्धाश्च प्र..............दा निर्विरोधरमणीयमभ्यस्यमानपुण्यकर्मण: प्रमि.... स-रसि चित्रायण्यां कात्यायनस्य भगवतो हुताशस्यात्मजन्य.............. (10 b) बह्वाश्चर्ये सप्तजपादप: (?) क्रमयमानकामिनीकपोल........ पतिमधूकपुष्पं पुष्पपुरं च तत्पुष्कर इवानन्तभोगमुत्कृष्ट...... .......दत्तो नरवाहन इव पुण्यजनाश्रयं निधीश्वरो हरि... र्यमहाप्रभावर्षिपादो गन्धवह इव घनक्षयमशेषक्षिव........... ...इव भोगिनिलयमखिललोकधृतिकर:.... युध इवोज्ज्वलप्रमदवनमात्मगुणाभिभूत फाल्गुनश्चाश्च.... .............. तिष्ठन्नात्मयश.... भूषणभुवनरस...............यमतिमानुषाकारसंप........... ....बन्धसम्भूतव्रत....पुनर्जातामिवमी........रेप्रजा: । येन च गोवर्द्धनधरणिधरधारणो दामोदर:...............मेकगौरवं भू...जभूधरयुगलमना..............बिभरां चक्रे । यश्च नयनाधरकरणचरणप्रभाभिनवबन्धु.... ...........वृत्तलक्ष्मीविस्मृतानि कदर्थयांचकारेव कमलकाननानि । यस्य च मत्तमातङ्गतुङ्गकुम्भकूटपाटनेषु सुभटमण्डलपृथु.... र्मिवेगव्यावर्तनेषु स्यन्दनवृन्दवज्रपञ्जरव्यञ्जनेषु च व्यापारितस्तदाया-सपिपासित इव समरमण्डलेषु बाहुदण्डोम....... ...... (11 a) यश: क्षीरसागरमशेषमाचूचुषत् । यश्च सम्यक्प्रणियमान..............कदर्थनां कलिरास्थं सरस्वतीहृदतमित्रवर्ग: सर्वमेव च शरीरं महापुरुषलक्षणानि प्रत्यव.........संहतय: स्थूलकरावलूनकवलप्रवालमुण्डमूर्द्धान्नोद्भूतप्रसूनमुकुलपङ्क............नोदाज्यमस्तकघातभग्नस्कन्धमुक्तदृहिता प्रदुस्वपीडाविष्टसे ज्मस्मनपि मध्ये काकुत्स्थकपि ............काण्डमाप्य

गर्वितो वेनसूनुरिति ऊ......शिशिरकरशिशिरगुणैर्दिवं पृथिवीं दिशश्च सर्वाः सुरभि......मश्च न वर्णव्यतिकरो न वर्णव्यतिकरो..... न राजाविनयशङ्कान— राजविनयशङ्काश्च......नाशनचिन्तानाश.... पाकशासनोऽपि नावग्रहं शोकं कर्तुं त्रिभङ्गं पुनरन्ये । स च राजा सकलमण्डलग्रासराहुचिह्नया संरम्भ...... ..भसभिघातवेलावनलेखया रिपुजीवितमधुचूषणभ्रमरमालया भुवनमहानिधानरक्षण........ (11 b) सरनिलीनभेघराशिकया वीरकार्मुकविजयलक्ष्मीसङ्केताभिसरणत्रियामया यममाहिष.........लां, सकलकुसुमसम्भारभरितारण्यधम्मिल्लबन्धां, अन्तरिक्षनीलांशुकोत्तरीयां विश्वमेव विश्वम्भरा...... विस्तारविविक्तबुद्धिषु सकलकलावगाहवैचण्येषु दुष्टराजलक्ष्मीकरेणुकाविनयनवारणांकुश... ... ...रणेष्विव पदबन्धविधुरितभुजङ्गलो.... गमालिष्विव प्रवरगुणरत्नराशिसम्भवेषु निसु........ण्डलावलम्बनेष्वैरावतविषाणक......वगुरुप्रतिमानेषु सुमतिसुमित्रसुश्रुत........नराग-वर्त्मना मन्मथप्रतिमकान्तेरन्तःपुरेष्वरमत । आसीच्च तस्य महीपतेः समस्त.... ....सौकुमार्यैरवयवैरसाधारणमार्दवाभ्यां च......मानसाभ्यामुपेता तथा सुकुमा........भ्रुवैव कार्मुकमुखच्छाययैव चन्द्रमसं श्वासेनैव सुरभिपरिमळं मल......... (12 a) सरत्नमेखला विपुलोन्नयनितम्बचुम्बिना मदनव्यालहस्ति बालहस्तेन पर्यभिसारदुर्दिनमुपसारयन्ती वदनचन्द्रमण्डहठापकृष्टपुण्डरीकलक्ष्मी........ताभ्यां मृणालिकाभ्यामिव शिरीषदामकोमळाभ्यां भुजलताभ्यामुद्भासमाना, सर्वशरीर......भक्तशेषाभ्यां सौन्दर्यपुञ्जाभ्यामिव स्थापिताभ्यां हरदग्धमनोभवोद्धृत्यसार........मिव तथाकृतोपयोगाभ्यां धात्रा चन्दनधवळक्षुधालेपोचिताभ्यां......निवासकुम्भाभ्यामिव रागस्य स्वच्छमानसरसातिरेकपूरिताभ्यामिव गुरुतराभ्यां पयोधराभ्यां भ्राजमाना, गजकुम्भकठोरपीवरकुचातिभारसाधा..,.,,.....माणुत्वादेव भुवमभंगुरां

विभूतिं मध्ययष्टिमतिजघनघनाभोगभारखिन्नोरुदण्डस्थिरीक्रियोपभुक्त भूयोऽवयवत एव तनुतरीभू........द्वितयेन राजमाना, प्रणयकलहताडितप्रियतमहृदयोज्ज्वलितरागालिप्तयोरिव नखचन्द्रदशकरश्मिनाळिकासहस्रचूषितेनाशेषभुवनवारिजवनप्रभासञ्चयेनैव सततमाप्यायमानपाटलिम्नोरमलरागलावण्यच्छलादरुणाशोकपादपेभ्यः स्तबकराशीनिव दोहदपूरणतरळनेषु दातुं संगृह्णतो मुखकमलामोदनिर्जितवसन्तकरदत्तमिव सर्वपल्लवसौकुमार्यमुद्वहतोश्चरणारविन्दयोर्द्वन्द्वेन सैन्धूरीरिव दूरभवः(?) कुर्वती, तरङ्गमयी भ्रूपताकयोः, इन्दीवरमयी नयनयुगे, रक्तोत्पलमयी दन्तच्छदे, कुमुदमयी ईषत्स्मितेषु.........निश्वसितेषु........ (12 b) अमृतमयी वचासि, प्रसादमयी मनसि, चक्रवाकमयी पयोधरयोः, आवर्तमयी नाभिरन्ध्रे, पुलिनमयी नितम्बतटेषु, पुष्करमयी च पादतलयोः अमर.....पभोगावतीर्णा मन्दाकिनी लीलाकराकान्तिरागचातुर्याणि पञ्चेव पञ्चभूतस्थाने प्रतिविधाय निर्मितेव प्रजापतिना, प्रावृडिव घनगम्भीरस्तननाभीरमणी, शरदिव सरसां कान्तिमुद्वहन्ती, हेमन्तवृत्तिरिव प्रालम्बिनी हारमालिनी शिशिरश्रीरिव नवनवमालिका, वसन्तवेलेव चारुभुजवासभूषिततनुलता, घर्मसम्पदिव कोमळपाटलाधरा सर्वर्तुसमवृत्तितयैव नन्दनस्वभावा, सर्वावरोधप्रधानभू, रतिरिव दर्पकस्य, शचीव शतमखस्य शैलसुतेव विश्वेश्वरस्य लक्ष्मीरिव पुष्करेक्षणस्य, बुद्धिरिव धनाधिपस्य, देवसेनेव सेनापतेः प्र........रोहिणीव बुधभावनस्य, अरुन्धतीव असुभ्योऽपि वल्लभा देवी वसुमती नाम ॥

तस्मिंश्च सम्राजि राजीवलोचनयान्याभिरप्याधिक........शालिनीभिराविरुद्धानेकधर्मार्थाभ्यनतिसङ्गमङ्गजसुखमश्नुवाने, कदाचिदभिषेक्तुमिव दिग्जयाय पुष्पजमाजगाम द्रुमलताधूतैर्मधुनिवहवाहिभिः कुङ्मलपु............हस्तैः कुसुमलक्ष्म्या समयः मध्ववतारवेगोद्धूतमि

व हिमजलं जगाल । दक्षिणा.........चक्य दिग्वधूमुपेयुषि पटौ पतङ्गे अतीवोरुतरमुत्तराशासौभाग्यमुवाच ह । दिनकरविरहे समगृहीतायाः दिशो दीर्घनिश्वास इव मन्दमन्दमुत्सर्प तप्यमानपान्थजन........य-मारुतो मलयमरुत्प्रेरितेन स्मरवैश्वानरेणैकभवन इव त्रिभुवने सुरासुर-मुनिमनुजमादीप्यमाने तद्दाहप्रतीकारक्षमाणि पयोधरकलशसहस्राणि शर......(13 a) मिजनाः कामिनीसमाजस्य, चित्तोपसृताप्रियोष्ण-बाष्पवारीपूरप्लुतेषु प्रोषितानां हृदयेषु पाययितुकाम इव कामज्योत्क-र (?) प्रकामानिषूश्चिक्षेप । ...स... तरुतलास्तीर्णकिसलय शयन-शायिनीनां कामय (?) कामिनीनां कामशरीरक्षते......क्षेप इव म-मेसु मधुरसासिसरः परभृतनखमुखोद्दलितकुड्मळगर्भनिर्गच्छितः पपात । तस्मिंश्च समये रतिसमरविधिविशारद कुसुमशरशिबिरनीराजनज्वलन-ज्वालाव........वलीषु च राजपुरन्ध्री माहारजतोत्तरीयांशुकवतीषु स-कलजगत्प्लावनोद्वेलरागसागरतरङ्गवेणिकासु विकसन्तीषु रक्तकुरवका शोकशल्मलीपलाश....पारिभद्रडाडिमजपाराजिषु रमणीयचरणनळिन-ताडिताशोकरोपप्रोत्साहिताशेषवनसमाहृतशशिकरकलाविभ्रमेषु निर-न्तरपव........ मुखप्रकरजर्जरितन्यग्रमपवनविविधवृक्षविग्रहधवळक्षेप-टुबन्धेष्वबन्धक्रमथनमन्युसन्धुक्षितेक्षणाशुशुक्षणिक्षपितहृच्छयोच्चयभ - स्मभासुरेषु करीरकेसरेषु सितसिन्दुवारवकुलसालतिलकनवमालिका-दिषु ललितमाधवपीतवाससि मधूकवनस्थलीदिष्टवृद्धिविघातक (पिष्टा-तक ? ) प्रकरे(र)स्फुटाग्निकटकिङ्किरातकर्णिकारचम्पकप्रकरेषु स राजा मत्तवारण इव वशाभिर्मत्तकाशिनीभिः परिवृतो मधुमत्तमधुकरकदम्ब-कान्धकारितकोधानि क्रीडावनान्यन्वगाहत ॥

तत्र च मदरक्ततकामिनीकपोलरागसन्ध्यागमविधुरितसरश्चक्रवा-कमिथुनकानि बभ्रत्, पानगोष्ठिमण्डलानि त्रिदिवमेदिनीम...कान्तहृ-[illegible] कौतुकाविवाळ्यवस्थितगगनानां खेदखेदिताल[illegible]

वानि भ्रान्तकन्दलभ्रमितदुर्दिनो......गीयमानस्वविक्रमापदानानि च पश्यन्, . . . . . (13 b) यन्त्रडोळप्रेङ्खितानां कोमळकुसुमकिसलयोत्तरच्छदासु विलोकपल्लवान्तरप्रविष्टपवनालोलितलतागृहोदरमणित . . . . , तचीनांशुकान्तरीयाणामपि करनखमणिरश्मिसंवलितरत्नमेखलामयूखजालजल्पितदुकूलकर्मणामन्तः पुरसुन्दरीणामरणितरत्नशकरीतुलकोटिपारिहार्याङ्गदानि, प्रेङ्खोलितहारदीधितिप्रकरकर्पूरचूर्णविमुच्यमान श्रमाक्लिन्नकुचतटानि, मधुरविवाददत्तदन्तच्छिन्नसन्धिसमाधामनदत्तसदयलीलाचुम्बनानि, गाढालिङ्गनमृदितकण्ठदामप्रतिनिधीकृतप्रियतमेक्षणकुवलयसृष्टि, मंजुविहङ्गभाङ्गिरातिप्रपञ्चमूर्च्छिताङ्गजविदाहवेगानि, रागसाम्यसमाहितरसोत्कर्षाणि राजवृषो रतानि निर्विशन्नुपवनविषयिणीमृतुविभूतिमनुबभूव ॥

प्रवृत्तयोश्च विचित्रपुष्पयोश्चैत्रवैशाखयोर्दैत्यराज्यमिव शुचिशुक्रमयं यमसौराज्यमिव प्रतिदिनमरुणायमानेन करविरसीक्रियमाणलो . . . . . रक्षोराज्यमिव परिलघुप्लवङ्गलंघ्यमानहीनवाहिनीजलं, किंपुरुषराज्यमिव द्रुमगणगुरूष्मवारणवनोत्सेकरागदृप्तकिंपुरुषं, मन्मथराज्यमिव मरुद्गणभ्रमितपत्रमण्डलापरुद्धसुरभव . . . . सुमातपमनुबुभूषुः, उत्थ . . . . मलरक्तोत्पलानि प्रदीप्तानीव घर्मभयप्रविष्टेन कन्दर्पानलेन दलशीतलजा . . . . जातशीतळजलतलानि दारुणनिदाघगलिताशिशिरकारागृहाणीव मधुकर . . . . (14 a) निबहलकालान्धकारकालोदराणि करतलोदरीभिः सह सरस्यवजगाहे ॥

प्रविशन्तीषु च प्रणयिनीषु प्रियसखीष्विव प्रत्युदस्थुः प्रसारितोर्मिहस्तदत्तगाढकण्ठग्रहा वाप्यः प्र . . . पक्षविक्षेपवारिदुर्गप्रतिस्तब्धैः प्रसन्नमिवोदीर्णदण्डैः पुण्डरीकैर्विमुक्त . . . . द्वन्द्वेषु मन्दं शब्दं सुन्दरीमुखेषु शिलीमुखा निपेतुः । निमज्जनाद्युपायव्यसानितस्य पुरुष . . . तमिष्वधारागणस्य (?) भोधा (?) भ्रान्तिादिदृक्षवः कटा-

क्षानम्भोगभंशायिनीनां पक्ष्मलाक्षीणामुदवर्तन्त क्षोभतरलितास्तरुणशफरकाः । नृपतिनितम्बिनीबिम्बाधरचुम्बिनो नाभिजग्मुरतिचपलाः सरस्तरङ्गा अर्घमानानामाननमपि तु विलसन्तो विसर्पिणां मार्गमूहुः । प्रतिमुखस्थितकुवलयक्रोडादिवातिवामानि भामिनीनामरज्यन्त लोचनानि । चकोरलोचना कुचारोहचक्रः संमर्देऽपि कलुषीभवद्भिरम्बुभिरौत्पत्तिकत्वं जलत्वमनक्षरमाचचक्षे । गुरूनपि निरपेक्षो जघान वारिवेगो वरोरूणामुरोरुहभरान्, न हि विवेकः क्षुभितस्य । जलमध्ये मौनमाचरन्तो मेखलाकलापास्थान एव गुणत्वं समर्थयां बभूवुः अपास्तालक्तकैः केनापि निराशेनेव दशनच्छदकिसलयैः व्यजीयन्त रक्तकुवलयवनानि येषामनेकशो रतिरणप्रणीतोत्थितानां प्रतिस्पर्धिजये सहायकृत्यम् । इत्थं च वर्तमानासु पवरपवतूणीतीनां (?) वक्त्रव्यतिकीर्णापि विकीर्णितोर्मिषु करपुटसलिलसेकलीलाभूतालिकासु प्रहेलिकासु महीशोऽपि महावराह इव वहन्नक्ष्सा वसुमतीं देवीमाकुलाकुलामालोलयन्नपश्चचाल चिकुरांसतटाश्लिक्रीड । क्रीडासु प्रकीर्णप्लुतनिम्न . . . , स्वास्थलव्यचारपति तद्द्रव्यावि चयव्यतिकरभेदादृष्टमार्गया जलक्रीडया तत्प्रधानाङ्गेषु च स्फुटगद्गदगम्भीरभेदादिस्वरेण . . . मुक्तसंज्ञेन सलिलवाद्येनानेकमधुरकरण . . . णमुक्तैः प्रीतिपल्लवद्रवैरिवैनं धाराजलैः . . . . . रश्रृङ्गकोणमुखमुक्ताभिः कुंकुमजलधाराभिरनङ्गपन्नगमुखशिखिशिखाभिरिवावचकरुः । अपरा विपक्षव्यक्षितविलासरागरोषिता रक्तकटाक्षमालाभिरेवजिह्मनामाभिः कौसुम्भसरिद्भिरिव सरभसां विधुरायमाणमाचुक्रुशुः (?) इतरास्तमसीव पयसि दुर्विभागगतयः करतलकमलावष्टम्भप्रसृप्ता यादृच्छिकैर्नाम तच्चरणमूलघट्टनैः स्पर्शातिशयानुमेयप्रार्थनप्रणिपाता न कृपणमन्वातिष्ठन्त ॥

अवनिपोऽपि गर्विता व्याकुलयन्, मुग्धाः सन्तारयन्, भीताः समाश्वासयन्, कुपिताः प्रसादयन्, मुदिताः प्रोत्साहयन्, प्रस्थिताः

प्रतिरुन्धन्, कासांचिदुत्पलाशां वल्लीमिव संफलयन्, कासांचित्पद्मरागं रत्नमिव संपादयन्, कासांचिदमन्दमारभ . . . . मनोरंशुकान्यलक्ष्यगतिराक्षिपन्, कासांचित्कमलस्रजस्सङ्गधूननच्छलाभिरश्चनैः स्निग्धताम्रारलताराणि नेत्रोदराणि चुम्बन्, कासांचित्कामायतनेषु कामशरानिवादृश्यपातान्नखानर्पयन्, निबिरीसविलासखण्डातकपरिहितः पर्याकुटिलकुन्तलोत्तरापाङ्गलोचनः कुंकुमरागलौहितौघप्लुताङ्गः सन्त्रासितसकलराजहंसनिवहो विहृत्य समरादिव सरसः सह प्रियाभिर्जयश्रीभिरिव निर्जगाम ॥

जगाम चामज्जनानन्तरमनष्ठितयथोचिताभिषेकमङ्गलः यथाविध्युपस्थाय तिग्मभानुं भगवन्तमुपास्य चित्रभानुमभिराध्य च देवं देवकीसूनुं सह सुहृद्भिः . . . . स्नानुसारिणा सुरभिचन्दनरसेन कृतसमालम्भनः कुशलसूदसाधितेन शोधनकल्पनप्रक्षालनप्रतिस्तम्भनमार्दवकरणशीतीकरणप्रसादनस्नेहग्रहणवर्णक्रियागन्धोपसंहारषड्वर्ग(वध) . . . . (15 a) दनस्नेहविचारपङ्क्तिसंज्ञाभिस्तयोदशविधाभिरनेकाबान्तरविकल्पाभिः क्रियाभिरुपसंस्कृतेन स्वात्मोचितेन सरसंस्वाद्येनामृतातिशायिना पटुपाटलपरिमलामोदनिर्हारिणा स्म . . . . येन पानीयेनाहितधृतिरादाय धूपवर्तिमाचान्तो बहलपारिजातसौरभोद्गारिक्रमुकफलशकलानि शकवधूटीगण्डपाण्डुरां च ताम्बूलवीटिकां . . . जरठपाटलीपुटक्रोधपाटलं च शङ्खचूर्णन्त्रय . . . . कटुकाविशदं विमर्दोष्णं लपनलाघवकरं चोपयुज्य रज्यमानदशनामराणो मणिकुट्टिमपथेन गत्वा प्रसाधितं मुक्तस्थानमण्डपमतिमृदुतिक्षौमपाण्डुनि स्थानदकचीनपट्टोपधानके पुष्पवाससुरभिणि हैमप्रीतिपादुकप्रतिष्ठितप्रवररत्नचित्रपादे पादपीठसनाथपार्श्वे प्रत्यासन्नसौवर्णप्रतिग्रहे शयनपर्यङ्कतले मुहूर्तलब्धविश्रमः सन्निहितः . . . . सामन्ताचित्रालापैश्चिरविनोदितो विसृज्य तद्विलम्बमाने कदम्बमुकुलाकिञ्जल्कपुञ्जरक्तिमपि स्व-

रितप्रवर्तितस्यन्दने सन्ध्यामुखचुम्बनाभिलाषिणि क्रमेण मन्दायमानोष्मणि मणिशिखासुखालोकलोचनेन सुखविविक्तोद्गन्धिनैपथ्यरमणीयेन विजृम्भमाणमल्लिकामुकुलदामप्रलम्बोत्तरीयरमणीयेन सुन्दरीजनेन चन्दनसलिलसंक्षालनाशिशिरेषु स्मेरमल्लिकोपहारेषु सौधहर्म्येषु सुसंस्तसंशितगीतगोष्ठीभिश्च प्रियविदग्धसुहृत्सखः प्रदोषमनैषीत् ॥

उत्तरयामद्वयमुन्मदमश्रुवादिनीजनमनोविधेयवृत्तिरगमयत् ॥

एवं च परिसमापितग्रीष्मस्याशेषशिरीषश्रीमुषः क्षपितकरञ्जमंजरीत्विषस्त्विषिमल्लोमगोलकरातिरस्क्रियारम्भजजम्भकाजनाभिनिबर्हणाज्ञाविजृम्भिताम्भोदकोदयः कुटिलकोमलतटितो विघटमानकुचकट्मलामोदलिप्तककुभः केसरसुरभितनभ . . . , (15 b) चन्द्राकिबर्होत्तरारासिता भूम्नोपगुप्ताकंगोगणागणातिथा दृप्तातकस्रजस्सुजातजातिजातयो मुदितमुग्ध्यूथिकावर्षन्नववार्षिकी लतालालितलाङ्गलीकलिकामुकुलितनिचुलवथिय : . . . , तयो विकचकदम्बचुम्बिवाचालमधुलिहः सलिलकणस्यान्दिमन्दमरुतोकृतमुखरभेकभेरीभीमागमानिशिथानिशीथिनीभेदाब्दुर्दिनदिनाद्भुतमनोऽभिसारिकाभिद्रुतदयितोद्वासिता विकसितबलाकालीधवलितभुवो भिन्नशिलीन्ध्रबन्धनासिन्धुरमामन्द्र गर्जितघनाघनस्तनयित्नवो नवजलसेकनिर्वृतिविनीतकेतकीगर्भखेदापादचारक्षमश्यामलशाद्वलवनस्थला नीलकण्ठनृत्तलीलाविलासिनः सन्नापन्नगकुलाः कूलमुद्रुजोद्कीद्रवत्सरित्तरङ्गिणीशताश्शतमखगोपावलीप्रवालमेखलाधृतवनस्थलीनितम्बपार्श्वोपार्श्वविश्रम्भराङ्गावरूढसरस ,. यौवनावनजपवनस्य . . . सनदायिनो दीयमानदानवारियोगनिद्रासुखाः सुखमया इव प्रादुरासन् प्रावृषेण्यवासराः ॥

तासु च ग्रीष्मातपातुरत्रिलोकलक्ष्मीविश्रान्तिधारागृहेषु वर्षावासरेषु कुटजकुड्मलहारमालिनीभिः लम्बकदम्बकाञ्चीदामभिः केतकदन्तबर्हपत्रभूषितश्रवणपाशाभिः मदमयललामलाञ्छितललाटिका-

भिरार्द्रगैरिकरागरञ्जितचरणपल्लवाभिः कुन्तलवलयिनीभि सुन्दरीभिः कृतकिरातनितम्बिनीवेषविभ्रमाभिः रटन्मृगेषु नटच्छिखण्डिषु स्फुटन्नीपेषु रटन्निर्झरेषु वर्षजलधाराधौतरत्नोपलतलेषु क्रीडापर्वतेषु विजहार ॥

धाराखद्विगुणबृंहितमदरागं च वार्षिकं . . . . वल्लीगुल्मगुलुच्छकच्छन्नमार्गेषु कृष्णागरुसारधूपसंचारोद्गेषु च मणिदरीगृहेषु मत्तरामाद्वितीयोरेमे । मण्डपचतुरश्रयातासु चावर्तवतीषु चरणमण्डपगर्भवापिकासु कदुष्णवारिपूरितासु . . . . (16 a) शतावर्तसितासु घर्म इव लीलयागन्धगजगामिनीभिः समं समक्रीडत ॥

निबिडितासु च निशीथिनीषु मन्मथमथितधृतीनां दुर्दिनाभिसारिकाणामासारजलापराधक्लिष्टनैपथ्येषु गात्रेष्वादरप्र . . . . यमानमण्डनस्तासां च स्वजनवञ्चनापदेशकौशलेषु श्रूयमाणेषु संहर्षेणावसन्नकृतकलीलानीलांशुकावगुण्ठनस्यान्धकारराशेरुपाक्रियायामुपन्यस्तयामात्मनि पुरुषाभिमानमारोपयन् कचिद्भवनभित्तिस्पर्शपरम्परोन्नीतपद्धतौ कचित्तरलसौदामिनीदाम दर्शितपुरुषो भागे काचिन्नागरिकपटहशब्दगम्भीरगर्जितमुहूर्तमात्रविह्वलावस्थाने कचित्प्रातिरोधकानामिवाम्बरग्राहिणां प्रथमाभ्राणामविरलशरवर्षासारसंभ्रमाश्लिष्टमन्दिराङ्गणमार्गपादपस्कन्धे प्रसङ्गोदीरितरागाभिसरण साहसे सानुकम्पप्रमदामापद्यमानः स्वतिशयोपचार . . . . सान्त्वनमहत्वरसमनेकधा सुरतलास्यमत्युदारतरलितविभ्रमंबबन्ध ॥

बन्धागारगर्भादिवाभ्रपञ्जरान्निर्गच्छति पुनरुष्मा . . . . वनैरन्तर्गतैरापतप्रभग्न इव ध्वस्ते मेघवने चिरनिरोधसम्पीडितखधामामर्षितार्तकरप्रतीकोष्विव प्रक्षीणवारेषु वारिधरमहाह्रदोदरेषु . . . . मोद्घोषणविराममूकेषु स्तोकिकेषु गलिपतयो धरांशुकासु लज्जयेव कापि लीनासु ह्रादिनीषूदधिमहावलाहकाचूषित वर्षवारिपूरस्यान्तरिक्षसरसो

मरकतकुटीष्विव स्फुटीभवन्तीषु नीलकण्ठकण्ठमेचकासु दिक्षु शुकासीरशासनकलत्रगोषु शीर्णेषु शिखिबर्हेषु प्रतिबद्ध मुकुन्दलोचनारविन्दवारिलवारिश्रमयेष्विव प्रवृत्तोष्वितस्ततो विजृंभितमम्भोरुहवनेषु पन्नगेभ्य इव निर्विषेभ्यः पयोदेभ्यो विहाय भयमतिपतत्सु रात्रिं दिवमध्वनोऽध्वनीनेषु सकलाब्दकलुषितासु बहुमुखा सारवार्तावि . . . दत्स्वयमेव क्रमादुपागतप्रसादसुचिरक्षोभानुबन्धलज्जयेव मन्दमन्दं वरुणालयमुपसर्पन्तीषु प्रतनीयसीषु फेनमालिनीषु मधुपोन्मादवनवने मदगन्धविदग्धविशारदे शारदे विदारयति मनांसि मानवतामनङ्गवारणानीके सप्तपर्णवने कुसुमधव . . . . कुसुमशरशरावलीष्व विरहितजनहृदयदारिणीषु समन्ततः पतन्तीषु हंसमालासु वसुधाविभ्रमहेमचूर्णैरसनरेणुभिरभिनवमनसिजातुराखिन्नसुभगासु वनस्थलीषु बाणमालिनीरिषुधिरिव मनोभुवो भुवः परिहरत्सु समाधिच्छेदशंखिषु स्वमुखानेकवारोदीरितमधुरशात्कृतिग्राहिणीनां शुकश्रेणीनामचकितमुक्तमंजुलप्रतिशारशासितास्वनुमन्यमानकलमकणिशभङ्गासु कलमगोपिकासु सकलकामुकानीकोत्कम्पकारिणीं खड्गधारामिव श्यामावलम्बमाने द्विगुणतेजसि ज्योतिषामधीशे शान्तगर्जितानि शशाङ्कपादच्छायश्रयीणि शल्मलीतूलपरिलघूनि मेघकुलानि विलोक्य दर्पादिव मत्तमधुकरीमधुरध्वानगर्भं हसन्तीषु कुमुदिनीषु विशदायां शरदि शारदशशिकरसितचन्दनधवळहिमजलबिन्दुशीकरशीतळासु श्लथमानशिशिरशेफालिकोपहारहासिनीषु हर्म्यमालासु मधुभाषिणीमधूनि माधवानुभावः पूर्णेष्वपि मनोमणिचषकेषु स्वकरतलोपधानच्छायोपरक्तारिक्ता इति मुग्धयुवतयः ॥

क्षणमत्नीहमाना: पातुमस्थुः । प्रहसता पुनः प्रियेणावार्यन्तमत्तमत्तकाशिनीवक्त्रांबुजचुम्बनाशये वासवतरङ्गमालासु च्छायामयः मपात । ........ (17 a) सः सुहमधुना सुवदनाभिपीत इव प्रति-

माशशीत्युन्मदानां तासां सहृदरिव स्वालापदेशक्लमनेन्दवः तथा स्नि-ग्धाः सन्तोऽपि पश्यन्त एव ताराकापतेरश्मनि संक्रामन्ति तत्कृतास्तास्ता ......चाचक्षिरे मृगाक्षीणां प्रक्षरितस्वेदबिन्दवो मुखेन्दवः । कस्य वा व्रीडानिमित्तं न हि विद्यन्ते प्रीतया सोऽपि सोमस्ता इवाभुक्तानि-पत्य तत्रैव संममज्जुः नत्वशकप्रयाहर्तुं सतैरपि तारा........कान्तिम-न्थरैर्व्यलम्बतनितम्बनीनां वदनपङ्कजैः कुमुदवान्धवः । फलितं हि गुरुतल्पगस्य तस्मिन्नेव देहे पातकमर्हति । मकरन्दराभवद्दर्शनप्रविष्टा इवान्धकाराक्रान्तयो ननृतुर्नतभ्रुवां भ्रुवः । सुधीरोऽपि रिपुव्यसने हर्षाद्विक्रियेत किमुत निसर्गचपलाः । कपोलसंक्रान्तचन्द्रश्चन्द्रोदय-इवोन्मदाना मुन्मीलितकुमुदकाननोप.... ....राननतामाविरासीत् । अ-मृतसम्मितस्मितोद्गमो मदिरातरङ्गभङ्गाङ्कं मृगाङ्क........ चक्रे दूरा-ममसहचराधिया कृपणचन्द्रदृष्टिषु करुणमारसन्तीषु भ्रमरकामिनीषु कलगिरोऽपि मदकलास्तथवाग्वशोचया......प्रियप्रवाध्यमानाश्च या-थार्थ्यज्ञानायोगात् योगितकुरङ्गलाञ्छनास्तमपि प्रबुद्धबन्धुजीववनवि-लम्बिना स्वलोचनप्रभासञ्चयेन संछाद्य तत्वाप्यहृदय...कङ्को भंगुरि-ताक्षीभुवो वञ्चकास्मान् वञ्चयम इति कर्णकुवलयै कान्तमंसयोरता-डयन् ॥

असावपि प्रियतमोपहृताननवनजवारुणिगण्डूषपानरक्तगण्डो गण्डलग्नरजतपुण्डरीकमिव कर्णचामरविभ्रमं प्रतिबिम्बमृगाङ्कममलं द-धानं चन्दनधवळमूर्तिरिन्द्रवारण इव मन्दाकिनीपयसि चन्द्रिकाजालके विजहार हरिणधरकरपुटावसिच्यमानामृतलवापनियमानखेदश्च राजपे-शलातिशिञ्जानवलयमंजुमञ्जरिकाक्षीगुणानि गजेन्द्रजानिव भ्रमिम-न्तिभंगुरितमाद......बलिप्तानि कुवलयवनानि मुद्रन्, दारुणशरदा-तपत्राणि (17 b) कज्जलीकृतानि घनकुलानि तुहिनशीकरव्याजादि-वाकिरन्, हिमकरगृहलयेव सर्वौषधीषु गौरवमारोपयन्, नीहारद्रो-

हृदिव नित्योपगूढपावकान् वनस्पतीं स्त्रियन्, निजरिपुवारिजन्मवधेनरुषेव जलान्युद्वाष्पयन, सपक्षानुजिघृक्षयेव निसर्गशीतलानि मौक्तिकाभरणानि विभ्रमयन्, अखिलजीवलोकतत्कुलता षण्डफलभराकाण्डलुण्ठाकडामरीकदमनदीक्षित इव पतिमण्डलानि सङ्कोचयन, सकलत्रिभुवनरसहठोपहारपराभवदुर्विकत्थनतस्करामिव भास्करं निरुन्धन्, दीविनत (?) वाल्लभ्य वर्द्धितानि दिनविदाहवि फूर्जितानि वर्तयन, निगृहीत सर्वसत्त्वस्वच्छन्दपर्यन्तम्....…प्रायसर्वारम्भो व्यजृम्भत स्वभावशीतलो हेमन्तसमयः ॥

तस्मिन्नपि समये दलितहिमजालिमद्भिरनलज्वालाकबलितमलयजैधसानायसीना हसन्तिकानां सहस्रैः स सन्निहितविलासिनीयौवन....हावाहितनिदाघेष्विव महत्सु मन्दिराभ्यन्तरेषु तुहिनपटलातिभारनभयनिलीननभस्थलास्वि वानवरतदह्यमान कृष्णगरुबहळधूमदुर्दिनान्धकारासु मलिनदिगङ्गनामुखविलोकनाकुलतयेव गाढविवृतगवाक्षेक्षणासु प्रासादपंक्तिषु गन्धतैलावसेकसुरभिगान्धिभिः करतलकलिताभिर्दीपिकाभिः लोकसङ्कोचकृतो हेमन्तरजनीरिवाविच्छता परिजनेन परिवृतो यथर्तुवेषः समाहिष्या महार्हं शयनमारुरोह ॥

तस्मिंश्च रक्तनीलधवलकान्तिना प्रियतमेक्षणप्रभासञ्चयेन चित्रकञ्चकेनेव छाद्यमानो हृदयविजृम्भमाणमन्मथहुताशनोद्वे . . . . तल्पेन तत्कालोचितेन कुंकुमाङ्गरागेणेव रागेणाधरपल्लवस्यानुलिप्यमानः कर्णकथनीयमन्मथगुह्याख्यानेषु कुन्दकलिकाभिरिव स्मितमयूखमञ्जरीभिः क्रियमाणावतंस. क्ष . . . . (18 a) बाह्यप्रणयकथाभिरुपपादिरतोत्सवोपकरणासु निर्गतासु परिजनवधूषु मधुरचुम्बनोपक्रमवृद्धरागावेशो विवशस्फुटपातितदशनपद्धति . . . . तवेदन . . . . मुखग्रहणविग्रहोपयुज्यमानाशिखरनखरलीलायुधो सललितविसंवादनिर्गमप्रतिबद्धरुद्धनीविकांशुकपरिपन्थिकोपलीलाकुञ्चितभ्रुकु . . . .

लधम्मिल्लबन्धसन्धुक्षितमन्मथातिसंभ्रान्तान्तरितविरोधनपयोधराविगाढो गुरुनितम्बसंमर्दवर्धिताक . . . . . . . पीडिताकम्प्रमध्यच्छिद्‌-ष्टाधरसंभ्रमभ्रान्तमुग्धलोचनमाञ्चितकररुहलिख्यमानकपोलविह्वलानन्व्यंजितस्तानित . . . . . . . . . . लभङ्गपारिप्लवस्वेदबिन्दुरेखमुद्दामरागदीयमानयुवतिपौरुषमुपोढलक्तकपादपालीरक्तभंगुरतरङ्गोत्तर . . . . . . . . . . छुरितगर्भगृहतलनलकवासचूर्णविसरधूसरितोपधानमग्राम्यविकल्पविभ्रमरमणीयमायतायतं सुरतमाच . . . . . शत्येशैत्यशान्तशकुन्तकान्ता मुक्तकोटरशते शीतालुजगत्प्रतीक्ष्यमध्यन्दिनातपे तापसतपस्संम्भारभावनोचिते...... पालनज्वलितपुण्यानलनसकलसहे (?) सुभगभासुरहसन्तिकासहस्रे सहस्ररश्मिश्रितशीतघृणिशीले श्लघनीयपक्ष्मणि मृगरोमणि मणिदामावहेलहे....... शुजन्मनि मन्मथवकुलवृन्दानान्दिकुञ्जकुञ्जे पञ्जरजालकाररीपुटघननयाच्यावाचाटहिमजडजठरे (?) पुष्करे पुष्करोद्राजिरोध्रसम्पादिगतिधृत.......

(18 b) मृगाशिशौ शशविचया क्षप्यकुड्यके शयनतलमुक्तशकशुकामुकमिथुने नूतनगर्भभारमन्थरमाधवीलतेव ललितमारुताकर्षणसुकर.... तुमुलधूमकधूनलोषधीदुष्षहप्रदोषदुर्भगोडुपे दुर्भेदस्फटिकदलबहुतुहिनघनघनसरहारिणशफरुके शिशिरकाले मीलयति भुवनमभि . . . . . . . . . . . . . . . . . . मृदुलाणचर्मकंचुकितचरणपद्मो हिमसत्रासिसारितप्रमदवमप्रसादवेदिकादत्तसङ्केतमङ्गजातलंघित . . . . . भिन्नवः सन्धारलालसोऽभिसृत्यसुसङ्गीतपरिजनागतप्रतीकारभूमिकेषु घटितगवाक्षावरणसंपुटेषु लीलाप . . . . काश्रावणाय च न क्षणविहस्ताश्यानमायस्तहस्तपल्लवव्यत्राहताधारपुटविघटितसमरसचुम्बनारम्भरागाविवलितनुल . . . . जर्जरकठोरपाण्डुरेवं, असकलगलदंशुकश्रोणिबिम्बझणायमानप्रवालकाञ्चीगुणं, अविरलघर्मवारिवर्षदूषितवि . . . . सनास्वादमाकम्पमानमप्रथमय-

न्त्रणोन्मथितमन्थरोहदण्डमकाण्डवलनभंगुरितरातिलयमकृतस्तम्भितान्त - रङ्गिणाविरामवृत . . . . रितकरुणमातुरकृपणकोमलालापालिघटनथा-पितमसनमनलसोपलभ्यमानसद्भूतनसञ्चारिकासुरतसतृप्तिमन्वगच्छ - त् शीलवल्लभावसर्पविदित . . . . विधानावरोध संगृहीतश्च तज्जघ-ननिरवकाशरशनागुणनिगालितचरणः प्रणयकोपकुञ्चिताभिर्भ्रूलताभिः आहृम इव तासामासादितहृदयवेपथुररुणाशो . . . . (87 a) महा त्मा सर्वैरेव सज्जधन्वाभिरस्माभिरभ्रैरिव गिरिरभ्यवर्षत, नत्वकम्पत इव . . . . गत्य दुर्गमत्वं चात्मनो विदूरतांच क्षेमस्थास्य ग . . . . भूयिष्ठतां च वासरस्य सर्वमिदमाकलय्य गन्तुकामः कुमारः करे-वीति . . . . . प्रस्थिता देवी बाह्यामित्यभिहितो गृहीतसारं वैदेहि-कजनमभयगतं च सखी बालवृद्धं पथिकवर्गमात्मनश्च चिरतशेषं . . . . . . शनैः शनैः प्रातिष्ठत सार्थमर्दनस्तु मामभुष्मिन्वातस्थाने महतः सारसंचयस्य रक्षाविधौ नियुज्य राजानमन्वबध्नात् । आहूलादयन्न . . . . . कांश्चिद्गुल्मानुप्रवेशं लीनान्वेषमनस्सु चक्रवन्धं बध्वा पा-र्श्वोपपीडं शाययन्तः, कांश्चिदसाहिष्णुतया रसेषु युध्यमात . . . . . कांश्चित्पशूनिव यष्ट्युपघातं कालयित्वा प्रजावरोधं स्थापयन्तः, कां-श्चिदजकनाशनष्ट...... नानुपलभ्य हर्षादन्योऽयं नामग्राहमाह्वयन्तः, तथा च केचिद्गुह्यकजनकथकानि कौतुकरं... स्फटिकं पाषाणशुष्क-पेषं पिष्ट्वा नरास्रविलेपन वक्षासि विक्षेपन्नो....................

पत्रिस्वशरविकमुपरतासु विदेहमनुचरधृतमातिप्रहृष्टया दृष्ट्या मुहुरवे-क्षमाणो यात्रहन्तमे........ तेजोराशेरकस्मादेवान्धकारहृतेतनुपराति-रभवदित्याशङ्कितसुहृद्विनाशोऽपि विशांपतिर्विवेश........ भाकं जाति किमिदमिति कृतापराध इव सरभसेनासमसवैतण्डिकश्चकम्प । पा-र्थवस्तु परिजनफकलत्रमाश्वा........ स्थितामेव मैथिल इति शबरम-प्राक्षीत् । अपीदसौ प्रविहतममङ्गलमनागमस्य देवो विदेह इति

व्याधिजातिप्र........ या तदुक्तमिति श्रुत्वा चोच्छ्वसितहृदयेनोर्वीभुजा स्वयं समाश्वास्य देवीमपवार्य कलकलमस्तु करुकथाशेषमित्यादिष्ट........ तिरनादृष्टमेव तं हृतशेषं सार्थमादाय चेनैव तरसा क्षेमप्राप्तं प्रहारवर्माणमकथयदिमं च बालकं मदुपलभ्य दुहितुरस्या वि..... धूलिभिरिवावचूर्ण्यमानस्य मदङ्गस्पर्शकोलालतावलीतन्त्रितविवृत्तपृष्ठमुभयपक्षविकीर्णकुटिलकुन्तलभरप्रकटस्कन्धकरजचिह्नमधोमुखी भवत : प्रिय........ यारिष्टसनगुणकिणप्रथितनिष्ठुरप्रकोष्ठयोः प्रवेष्टदण्डयोः प्रतिपेशमर्पितवत्यसौ च, मद्गात्रस्पर्शनिर्वाणरोहद्रोमाञ्चकल्पाभ्यां परिरभ्याभ........ व स्थितास्मि । स्वस्मिन्नेव वाहने अस्मिन्नेव च क्षणे क्षणदाचरं भीमदर्शनैर्भवद्भिर्भक्षितः क्षयमगादयं सार्थः । सार्थविद्रवे चासौ........ न्तेव भ्रष्टस्य करिणः कण्ठपार्श्वे यावदेनं लम्बयति तावदस्य करक्षुरतीक्ष्णेन क्षुरप्रेणाच्छेति स भुजच्छेदे वैणलाज..... तुपुरुषयुगलमध्येन यन्त्रशैथिल्यचलसमाधिसिंधुरश्रवणपल्लपायभेरीकन्धरार्धमवगाठवानयं तोमरः परि . . . . युषोऽस्य गात्राण्यस्पृशन्तः पञ्जरस्थामिव राजकेसरिकिशोरकमकार्षुः । बहुमर्मक्षत . . . . णश्च ममैष मत्समक्षं भियं भियेवास्पृशत् । बहुपराक्रम्य प्रियानसूनहासीत् । अहं च स्त्रीस्वभावसुल . . . . . कुशलिनं कुमारं दृष्ट्वा स्वैरमेनान्परित्यजामि पापीयसः प्राणानेषते निक्षेप इति रुजापनोदिनामृतस्पर्शनेनालिङ्गनेन तिसदयमादायमत्कारदप्राणेषु तेषु—

एतावानेव भाग उपलब्धः ॥

—:०:—

# शोधनपत्रिका.

| पु. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | २२ | व्यवसिस्तपः | व्यवसितस्तपः |
| ११ | ४ | व्याजहारं | व्याजहार |
| १३ | १० | रणवत्सया | रणवद्भ्यां |
| १५ | २२ | तस्थः | तस्थुः |
| १७ | ८ | पूर्जयत् | पूजयत् |
| १८ | १४ | येऽभूत् | योऽभूत् |
| १९ | २० | कृतार्थिकृत्य | कृतार्थीकृत्य |
| २० | २४ | जाग्रसे | जग्रसे |
| २२ | ५ | शम्बर | शबर |
| २२ | ६ | अत्य.... | अस्त्यस्या....कश्चिन्मातृ |
| २२ | ७ | तलमवेत | तुलभवेत सा ( माम् ?) |
| २२ | ९ | प्रत्यधि | प्रत्यति |
| २२ | १० | प्रव्रते | प्रद्रुते |
| २२ | १३ | शांषेण | शेषेण |
| २२ | १८ | त्युक्त्वा | त्युक्ता |
| २३ | ११ | स्त्रीत्वात् | स्त्रीयात् |
| २३ | १३ | अवक्रणे | अवक्रेण |
| २३ | १५ | मारक | दारक |
| ३२ | ८ | सुगत्या | सुमत्या |
| ३४ | १ | निबध्य | निर्बध्य |

| पृ. | प | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३४ | २ | पामरे स्माहि | वामरंस्व हि |
| ३५ | १ | दत्तन्या | दत्रल्या |
| ४२ | ११ | राजेत | राजेन |
| ४२ | २१ | स्नानः—तः स्तेथ | स्नातः—तस्तेय |
| ४३ | १५ | शररि | शरीरं |
| ४५ | १० | ते | त्य |
| — | | स्थ। | रव्यः |
| ४६ | ७ | न्ताशु | न्ताश्रु |
| ४६ | १३ | देव्यैः | र्दिव्यैः |
| ५३ | १२ | प्रत्यदु | प्रत्यद्द |
| ५४ | ११ | प्रीषिते | प्रोषिते |
| ५९ | ८ | षादेषा | षा दोषा |
| ५९ | ९ | तयद | तद |
| ५९ | १२ | नक्कु | न्यक्कु |
| ५० | १७ | धारयम् | धारयन् |
| ६० | २१ | तद्ध | तद्द |
| ६१ | १७ | स्तमि | स्तस्मि |
| ६४ | ९ | शस्त्रि | भस्त्रि |
| ६५ | ६ | अक्षिपत्प्रा | अक्षिपन् पा |
| ६५ | १३ | दृष्ट्वा | दष्टा |
| ६७ | १९ | त्मरत्वे | स्मरत्वे |
| ६२ | २१ | तारण | तोरण |
| ७उपोद्घाते | | | |
| ३ | ११ | मारमः | मारामः |
| १३ | १७ | जड्ढोः | जह्नोः |
| १३ | १८ | जिह्वा | जिह्वा |